पूजा विधि सहित

# रुद्राष्टाध्यायी

प्रकाशक--ठाकुरप्रसाद एण्ड सन्स बुकसेलर,

राजादरवाजा, वाराणसी ।

फोन ६४६५०
५३०२७

मूल्य २)५० पैसे

# अथ शुक्लयजुर्वेदीयरुद्राष्टाध्यायी

## ( पार्थिवपूजनादि सहित )

सम्पादक:—श्रीदौलतरामगौड वेदाचार्य
संशोधक—वेदप्रकाशगौड

प्रकाशक
ठाकुरप्रसाद एण्ड सन्स बुकसेलर
राजादरवाजा, वाराणसी

मूल्य २)५०

# अथ शिवपूजनप्रयोगः

ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा । यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति मन्त्रेणात्मानं पूजासामग्रीं च सम्प्रोक्ष्य रक्षादीपं प्रज्वाल्य शान्तिपाठं पठेत्-- ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतासऽउद्भिदः । देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानाम्भद्रासुमतिर्ऋजूयतान्देवानाꣳ रातिरभिनोनिवर्त्तताम् । देवानाꣳ सख्यमुपसेदिमाव्वयन्देवानऽ आयुः प्रतिरन्तु जीवसे ॥२॥ तान्पूर्व्वयानिविदाहूमहेव्वयम्भगम्मित्रमदितिन्दक्षमस्रिधम् । अर्यमणंव्वरुणꣳसोममश्विनासरस्वती नः सुभगामयस्करत् ।।३।। तन्नोव्वातोमयोभुव्वातुभेषजन्तन्मातापृथिवी तत्पिताद्यौः । तद्ग्रावाणः सोमसुतोमयोभुवस्तदश्विनाशृणुतन्धिष्ण्याया

युवम्॥४॥तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्विमवसेहूमहेव्वयम्।
पूषानोयथावेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये॥५॥ स्वस्ति नऽ
 इन्द्रोवृद्धश्रवाः स्वस्तिनःपूषाव्विश्ववेदाः।स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः 
स्वस्तिनो बृहस्पतिर्द्दधातु॥६॥ पृषदश्वामरुतः पृश्निमातरः शुभंया
वानोव्विदथेषुजग्मयः। अग्निजिह्वामनवःसूरचक्षसोव्विश्वेनोदेवाऽअव
सागमन्निह॥७॥ भद्रङ्कर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः। स्थिरै
रङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहिदेवहितंयदायुः॥८॥ शतमिन्नुशरदो
ऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम्॥ पुत्रासोयत्रपितरोभवन्तिमानो
मध्यारीरिषतायुर्गन्तोः॥९॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्म्माता
सपितासपुत्रः। व्विश्वेदेवाऽअदितिःपञ्चजनाऽअदितिर्जातमदितिर्ज्जनि
त्वम्॥१०॥ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवीशान्तिरापः शा-
न्तिरोषधयःशान्तिः। व्वनस्पतयःशान्तिर्विश्वेदेवाःशान्तिर्ब्रह्मशान्तिः 

सर्वꣳ शान्तिः शान्तिरेवशान्तिःसामा शान्तिरेधि ॥११। यतोयतः
समीहसेततोनोऽअभयं कुरु। शन्नः कुरुप्रजाभ्योभयन्नःपशुभ्यः। १२।
ततः सङ्कल्पं कुर्यात्—देशकालौ समुच्चार्य—श्रुतिस्मृतिपुराणोक्तफल-
प्राप्त्यर्थं धर्मार्थकाममोक्षसिद्धिद्वारा सर्वव्याधिनिरासपूर्वकं सर्वाभीष्ट-
सिध्यर्थं श्रीसाम्बसदाशिवप्रीत्यर्थं यथामिलितोपचारद्रव्यैः पूजनं
करिष्ये। इति सङ्कल्प्य पूजनं कृत्वा—

ॐध्यायेन्नित्यं महेशं रजतगिरिनिभंचारुचन्द्रावतंसं रत्नाकल्पोज्ज्व-
लाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तास्तुतममरगणै-
र्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिने-
त्रम्॥ ॐ नमःशम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय
च नमः शिवाय च शिवतराय च॥ श्रीसाम्बसदाशिवाय नमःध्यानादिकं
समर्पयामि। पञ्चामृतस्नानम्–ॐपञ्चनद्यःसरस्वतीमपियन्तिसस्रोतसः।

सरस्वतीतुपञ्चधासोदेसेभवत्सरित् ॥ पञ्चामृतं मयाऽऽनीतं पयोदधि घृतं मधु । शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम् ॥ पञ्चामृतस्नानं सम० । पयः स्नानम्--ॐ पयः पृथिव्याम्पयऽओषधीषुपयोदिव्यन्तरिक्षेपयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ साम्बसदाशिवाय नमः पयःस्नानं समर्पयामि । दधिस्नानम्--ॐदधिक्राब्णोऽअकारिषञ्जिष्णोरश्वस्यव्वाजिनः । सुरभिनोमुखाकरत्प्रणऽआयूꣳषितारिषत् ॥ दधिस्नानं समर्पयामि । घृतस्नानम्--ॐघृतम्मिमिक्षेघृतमस्ययोनिर्घृतेश्रीतोघृतंव्वस्यधाम । अनुष्वधमावहमादयस्व स्वाहाकृतंवृष भव्वक्षि हव्यम् ॥ घृतस्नानं समर्पयामि । मधुस्नानम्—ॐमधुव्वाताऋतायते मधुक्षरन्तिसिन्धवः॥ माध्वीर्न्नःसन्त्वोषधीः॥ मधुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः । मधुद्यौरस्तु नः ॥पिता॥ मधुमान्नोव्वनस्पतिर्मम्धुमाँऽअस्तु सूर्यः । माध्वीर्गावोभवन्तु नः ॥ मधुस्नानं समर्पयामि । शर्करास्नानम्

ॐ अपा ँ रसमुद्वयसठँ० सूर्ये सन्त ठँ० समाहितम् अपा ँ रसस्ययोर-
सस्तंवोगृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टङ्गृह्णाम्येषतेयोनिरि-
न्द्रायत्वाजुष्टतमम् ॥ शर्करास्नानंसमर्पयामि। जलस्नानम्-ॐशुद्धवा
लः सर्वशुद्धवालोमणिवालस्तऽआश्विनाः श्येतः श्येताक्षोरुणस्तेरुद्रा-
यपशुपतये कर्णायामाऽअवलिप्तारौद्रानभोरूपाःपर्जन्याः ॥ शुद्धोदक-
स्नानं समर्पयामि। गन्धोदकस्नानम्-ॐगन्धद्वारां दुराधर्षांनित्यपुष्टाङ्क-
रीषिणीम्। ईश्वरींसर्वभूतानांतामिहोपह्वये श्रियम् ॥ गन्धोदकस्नानं-
सम०। अक्षतान्सम०। नानापरिमलसौभाग्यद्रव्याणि ऋतुकालोद्भव-
पुष्पाणि बिल्वपत्राणि च सम०। धूपमाघ्रापयामि। दीपं दर्शयामि। नैवेद्यं
समर्प० हस्तप्रक्षालनं करोद्वर्तनार्थे चन्दनं सम०। मुखवासार्थे पूगीफलं
ताम्बूलं हिरण्यदक्षिणां कर्पूरार्तिक्यं प्रदक्षिणां मन्त्रपुष्पयुक्तनमस्कार
विशेषार्घ्यप्रार्थना च सम०। निर्माल्यं विसृज्य पुनश्च गन्धाक्षतपुष्पाणि

समर्प्य अभिषेकार्थं ब्राह्मणवरणं च कुर्यात् । आदौ विप्रपादप्रक्षालनम् । त्वाङ्गन्धर्वा इति तिलककरणम् । अक्षन्नमीमदन्तेत्यक्षतान् । श्रीश्चतेइति पुष्पमालां च शिरसि दद्यात् । ततो वरणसामग्रीं गृहीत्वा अभावे निष्क्रयद्रव्यमादाय सङ्कल्पं कुर्यात्—अमुकगोत्रः अमुकशर्माऽहं सङ्कल्पिते रुद्राभिषेककर्मणि एभिर्वरणद्रव्यैः पाठकरणार्थममुकगोत्रममुकशर्माणंब्राह्मणं त्वां वृणे अथवा अमुकामुकगोत्रान् नानाशर्मब्राह्मणान् युष्मान् वृणे । वृतास्म इति । ॐव्रतेनदीक्षामाप्नोतिदीक्षयाप्नोतिदक्षिणाम् । दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥ इति वरणग्रहणम् । ततः—ॐयदाबध्नन्दाक्षायणाहिरण्यꣳशतानीकायसुमनस्यमानाः । तन्मऽआबध्नामिशतशारदायायुष्माञ्जरदष्टिर्यथासम् । येन बद्धो बली राजा दानवेन्द्रो महाबलः । तेन त्वां प्रतिबध्नामि रक्षेन मा चल मा चल ॥

# अथ षडङ्गन्यासः

मनोजूतिरिति मन्त्रस्याङ्गिरसबृहस्पतिर्ऋषिः विश्वेदेवा देवता, यजुश्छन्दः, हृदयन्यासे विनियोगः। ॐ मनोजूतिर्जुषतामाज्ज्यंस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳ समिमन्दंधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्रतिष्ठ ॥ ॐ हृदयाय नमः। अबोध्य-

ग्निरिति मन्त्रस्य बुधगविष्ठिरावृषी, त्रिष्टु-
पछन्दः वैश्वानरोग्निर्देवता शिरोन्यासे विनि
योगः। ॐ अबोध्यग्निःसमिधाजनानाम्प्र
तिधेनुमिवायतीमुषासम् ॥ यह्वाऽइवप्प्रवया
मुज्जिहानाःप्प्रभानवः सिस्रतेनाकमच्छ ॥
शिरसे स्वाहा। मूर्द्धानमितिमन्त्रस्य भर-
द्वाजऋषिः, त्रिष्टुप्छन्दः वैश्वानरोग्निर्देवता,
शिखान्यासे विनियोगः। ॐमूर्द्धानन्दि

वोऽअंरतिम्पृथिव्याव्वैश्वानरमृतऽआजातम्
ग्निम् ॥ कविंᳬसम्म्राजमातिथिञ्जनानांमा
सन्नापात्रंञ्जनयन्तदेवाः॥ शिखायै वषट्।
मर्माणि त इति मन्त्रस्य विवस्वान् ऋषिः
त्रिष्टुप्छन्दः' लिङ्गोक्तादेवता कवचन्यासे
विनियोगः । ॐमर्म्माणितेव्वर्म्मणाच्छाद-
यामिसोमंस्त्वाराजामृतेनानुवंस्तान् ॥ उरो-
र्वरीयाव्वरुणस्तकृणातुजयन्त्वानुदेवाम

दन्तु ॥ कवचाय हुम् । विश्वतश्चक्षुरिति
षडङ्ग मन्त्रस्य विश्वकर्माभौवनऋषिः त्रिष्टुप्छन्दः, न्यास.
११ विश्वकर्मा, देवता, नेत्रन्यासे विनियोगः ।
ॐ विश्वतँश्चक्षुरुतव्विश्वतोमुखोव्विश्वतोबा-
हुरुतव्विश्वतँस्पात् ॥ सम्बाहुब्भ्यान्धमति
सम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ नेत्र
त्रयाय वौषट् । मानस्तोक इति मन्त्रस्य
कुत्सऋषिः, जगतीछन्दः, एकरुद्रो देवता, ११

अस्त्रन्यासे विनियोगः। ॐ मानस्तोके तनयेमानऽआयुषिमानोगोषुमानोऽश्वेषुरी रिषः॥ मानोव्वीरान्नुद्रभामिनोव्वधीर्हवि ष्मन्तःसदमित्त्वाहवामहे। अस्त्राय फट्।

इति षडङ्गन्यासः।

  

ॐ गणानान्त्वा गणपतिᳬं हवामहे प्प्रियाणान्त्वा प्प्रियपतिᳬं हवामहे निधीनान्त्वा निधिपतिᳬं हवामहे व्वसो मम ॥ आहमजानि गर्ब्भधमा त्त्वमजासि गर्ब्भधम् ॥ १ ॥

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ॥ बृहत्युष्णिहा ककुप्सूचीभिः शम्म्यन्तु त्त्वा ॥ २ ॥

द्विपदा याश्चतुष्प्पदास्त्रिपदा याश्च षट्पदाः ॥

द्विच्छन्दासाश्वसच्छन्दाꣳसुचीभिः शम्म्यन्तुत्त्वा ॥ ३ ॥ सहस्तोमाꣳसहच्छन्दसऽआवृतः सहप्प्रमाऽऋषयꣳसप्तदैव्याः ॥ पूर्व्वेषाम्पन्थामनुदृश्यधीराऽअन्वालेभिरेरत्थ्योनरश्मीन् ॥४॥ यज्जाग्ग्रतोदूरमुदैतिदैवन्तदुसुप्तस्यतथैवैति॥ दूरङ्गमञ्ज्योतिषाञ्ज्योतिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ५ ॥ येनकर्म्माण्यपसोमनीषिणोयज्ञेकृण्वन्ति

व्विदथेषुधीराः ॥ यदपूर्व्वंयक्षमन्तःप्प्रजा
नान्तन्मेमन÷शिवसङ्कल्पमस्तु ॥ ६ ॥
यत्प्रज्ञानमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृत
म्प्रजासु ॥ यस्मान्नऽऋतेकिञ्चनकर्म्मंक्रि
यतेतन्मेमनं÷शिवसङ्कल्पस्तु ॥ ७ ॥
येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृ
तेनसर्व्वम् ॥ येनंयज्ञस्तायतेसप्तहोतातन्मे
मनं÷शिवसङ्कल्पमस्तु ॥८॥ यस्मिन्नृचः

साम॒यजू॑ᳪ॑षि॒यस्मि॒न्प्रति॑ष्ठितारथना॒भावि-
वा॒रा॒ः॥ यस्मिँ॒श्चित्त॒ᳪ॑सर्व॒मोतं॒प्र॒जाना
न्तन्न॒मेम॑नः॒शि॒वस॑ङ्क॒ल्पमस्तु ॥९॥ सु॒षा॒
र॒थिरश्वा॑निव॒यन्म॑नु॒ष्या॒न्नेनी॒यते॒भीशु॑भि
र्वा॒जिन॑ऽइव॥हृत्प्र॑तिष्ठ॒यद॑जिरञ्जवि॑ष्ठ॒न्त
न्न॒मेम॑नः॒शि॒वस॑ङ्क॒ल्पमस्तु ॥ १० ॥ इति
प्रथमोऽध्यायः ।

## ॐ अथ द्वितीयोऽध्यायः ॐ

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ स भूमिꣳ सर्वतस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदꣳ सर्वं यद्भूतं यच्च भाव्यम् ॥ उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमातो ज्यायाँश्च पूरुषः ॥ पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽ

उदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततोव्वि
रुद्रा० ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि ॥४॥ अ०
१८ ततोव्विराडजायतव्विराजोऽअधिपुरुषः ॥
सजातोऽअत्यरिच्च्यतपश्चाद्भूमिमथोपुरः ।५।
तस्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदाज्ज्यम् ॥
पशूँस्ताँश्चक्क्रेव्वायव्यानारण्याग्ग्राम्याश्चये ।६।
तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे ॥
छन्दाᳫँसिजज्ञिरेतस्माद्यजुस्तस्मादजाय १८

त ॥ ७ ॥ तस्मादश्श्वाऽअजायन्तयेकेचो
 भयादतः ॥ गावोहजज्ञिरेतस्मात्तस्माज्जा 
 ताऽअजावयः ॥ ८ ॥ तंयज्ञम्बर्हिषिप्प्रौक्ष
न्पुरुषञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्त
साद्ध्याऽऋषयश्श्चये ॥ ९ ॥ यत्पुरुषंव्यदधुः
कतिधाव्यकल्प्पयन् ॥ मुखङ्किमस्यासीत्कि
म्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणो
स्यमुखमासीद्बाहूराजन्न्यः कृतः ॥ ऊरू 

तदस्य यद्वैश्यः पद्भ्यांशूद्रोऽअजायत ॥११॥ चन्द्रमामनसोजातश्चक्षोःसूर्योऽअजायत॥ श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षᳬशीर्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालोकाँ २ ऽअकल्पयन् ॥१३॥ यत्पुरुषेणहविषादेवायज्ञमतन्वत ॥ व्वसन्तोऽस्यासीदाज्यंग्रीष्मऽइध्मःशरद्ध

विहं ॥ १४ ॥ सप्तास्यांसन्न्परिधयस्त्रिःस

 प्तसमिधंः कृताः ॥ देवायद्यज्ञन्तंन्वानाऽ 

 अबंध्नन्न्पुरुषम्पशुम् ॥ १५॥ यज्ञेनंयज्ञम

यजन्तदेवास्तानिधर्म्माणिप्रथमान्न्यासन् ॥

तेहनाकम्महिमानंः सचन्तयत्रपूर्वेसाध्याःऽ

सन्तिदेवाः ॥ १६ ॥ अद्भ्यः सम्भृतः पृथि

व्यैरसाच्चविश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्य

त्वष्टाविदधद्रूपमेतितन्न्मर्त्यस्यदेवत्वमा 

जानमग्ग्रे ॥ १७ ॥ व्वेदाहमेतम्पुरुषम्महा
न्तंमादित्यवर्ण्णन्तमसः परस्तात् ॥ तमेवाव्वि
दित्वातिमृत्युमेतिनान्न्यः पन्थाव्विद्यतेयनाय
॥ १८ ॥ प्प्रजापतिश्श्चरतिगर्ब्भेऽअन्तरजा
यमानोबहुधाव्विजायते ॥ तस्ययोनिम्परिप
श्श्यन्तिधीरास्तस्मिन्हतस्त्थुर्ब्भुवनानिव्वि
श्श्वा ॥ १९ ॥ योदेवेब्भ्यऽआतपतियोदेवा
नाम्पुरोहितः ॥ पव्वोयोदेवेब्भ्योजातोनमो

रुचायब्राह्मये ॥२०॥ रुचंब्राह्मञ्जनयन्तो
देवाऽअग्ग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोवि
द्यात्तस्यदेवाऽअसन्वशे ॥ २० ॥ श्रीश्चते
लक्ष्मीश्चपत्क्न्यावहोरात्रेपार्श्वेन दं त्त्रारारू
पमश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मं
ऽइषाणसर्व्वलोकम्मंऽइषाण ॥ २१ ॥ इति
रुद्रे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

ॐ आशुश्शिशानोवृषभोनभीमोघनाघ
नःक्षोभणश्चर्षणीनाम्॥ सङ्क्रन्दनोऽनिमिष
ऽएकवीरश्शतꣳसेनाऽअजयत्साकमिन्द्रः
॥१॥ सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्का
रेणदुश्च्यवनेनधृष्णुना। तदिन्द्रेणजयतत
त्सहद्ध्वंयुधोनरऽइषुहस्तेनवृष्णा ॥२॥
सऽइषुहस्तैःसनिषङ्गिभिर्वशीसꣳस्रष्टासयु

रु०द्रा धऽइन्द्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहु
शर्द्ध्युग्रधन्न्वाप्प्रतिहिताभिरस्ता ॥ ३ ॥ पृ० २
२५ बृहस्प्पतेपरिदीयारथेनरक्षोहामित्राँ२ऽअप
बाधमानः ॥ प्प्रभञ्जन्त्सेनाः प्प्रमृणोयुधा
जयन्नस्म्माकमेध्यवितारथानाम् ॥ ४ ॥ बल
विज्ञायस्त्थविरः प्प्रवीरः सहस्वान्न्वाजीसह
मानऽउग्ग्रः ॥ अभिवीरोऽअभिसत्त्वासहो
जाजैत्रमिन्द्ररथमातिष्ठगोवित् ॥ ५ ॥ गोत्र २५

भिदङ्गोविदंव्वज्रबाहुञ्जयन्तमज्ममप्प्रमृण
न्तमोजसा ॥ इमꣳ सजाताऽअनुवीरयद्ध्व
मिन्द्रꣳ सखायोऽअनुसꣳरभद्ध्वम् ॥६॥
अभिगोत्राणिसहसागाहमानोदयोव्वीरश्शत
मन्न्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुद्ध्यो
स्म्माकꣳ सेनाऽअवतुप्प्रयुत्सु ॥ ७ ॥ इन्द्रऽ
आसान्नेताबृहस्प्पतिर्द्दक्षिणायज्ञः पुरऽएतु



सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्ती

नाम्मरुतोयन्त्वग्ग्रम् ॥ ८ ॥ इन्द्रस्यव्वृष्णो
व्वरुणस्यराज्ञऽआदित्यानाम्मरुताꣳशर्द्धऽ
उग्ग्रम ॥ महामनसाम्भुवनच्च्यवानाङ्घोषो
देवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षयम
घवन्नायुधान्न्युत्त्सत्त्वनाम्मामकानाम्मना
ꣳसि ॥ उद्वृत्रहन्न्वाजिनांव्वाजिनान्न्युद्रथाना
ञ्जयताँय्यन्तुघोषाः ॥ १० ॥ अस्माकमि
न्द्रः समृतेषुध्वजेष्वस्माकंय्याऽइषवस्ताज

रुद्रा०

२८

यन्तु ॥ अस्माकंव्वीराऽउत्तरभवन्त्वस्माँ२ऽ

उंदेवाऽअवताहवेषु ॥ ११ ॥ अमीषांञ्चित्त

म्प्रतिलोभयन्तीगृहाणाङ्गान्न्यप्वेपरेहि ॥

अभिप्प्रेहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तम

सासचन्ताम्॥१२॥ अवसृष्टापरापतशरव्व्ये

ब्रह्मसंशिते। गच्छामित्त्रान्प्रपद्यस्वमामी

षाङ्कञ्चनोच्छिषः॥१३॥ प्रेताजयतानरऽ

इन्द्रोवःशर्म्मयच्छतु ॥ उग्रावःसन्तुबा

अ० ३

२८

हवोनाधृष्ण्यायथासंथ ॥१४॥ असौयासेनाम
रुतःपरेषामभ्यैतिनऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्व्रतेनयथामीऽअन्न्योऽअ
न्न्यन्नजानन् ॥१५॥ यत्रबाणाःसम्पतन्ति
कुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृहस्पति
रदितिःशर्म्मयच्छतुविश्वाहाशर्म्मयच्छतु
॥१६॥ मर्म्माणितेवर्म्मणाच्छादयामिसो
मस्त्वाराजामृतेनानुवस्ताम ॥ उरोर्वरीयो

व्वरूंगास्तेकृणोतुजयंन्तन्त्वानुदेवामदन्तु ॥

इति रुद्रे तृतीयोऽध्यायः ॥ ३ ॥

❋ अथ चतुर्थोऽध्यायः ❋

ॐ विभ्राड्बृहत्पिबतुसोम्म्यम्मध्वायुर्दधद्य ज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षति त्त्मनाप्रजाःपुपोषपुरुधाव्विराजति ॥ १ ॥

उदुत्त्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥ दृशेवि श्वायसूर्य्यम् ॥ २ ॥ येनापावकचक्षसाभुरण्य

 

न्तुञ्जनाः। रा॥ऽअनु॥ त्वंव्विश्रूणापश्यसि॥३॥
दैव्यांवध्ध्वर्य्युऽआगंतुᳬरथेनसूर्य्यत्वचा॥
मध्वायज्ञᳬसमञ्जाथे॥तम्प्रत्क्नथायंव्वेनश्चि
त्रन्देवानाम्॥४॥ तम्प्रत्नथापूर्व्वथाव्विश्वथेम
थाज्ज्येष्ठतातिम्बर्हिषदᳬस्वर्व्विदम्॥ प्रती
चीनंव्वृजनन्दोहसेधुनिमाशुञ्जयन्तमनुया
सुवर्द्धसे॥५॥ अयंव्वेनश्चोदयत्पृश्निगर्भा
ज्ज्योतिर्ज्जरायूरजसोव्विमाने॥ इममपाᳬ

संङ्गमेसर्व्वैस्यशिशुन्नविर्मामातिभीरिहन्ति ॥६॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्र स्यव्वरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽ अन्तरिक्षᳫँसूर्य्यऽआत्माजगतस्तस्थुषश्च ॥७॥आनऽइडाभिर्व्विदथेसुशास्ताविश्वानरः सवितादेवऽएतु ॥ अपियथायुवानोमत्सथा नोविश्वञ्जगदभिपित्वेमनीषा॥८॥ यदद्य



कच्चवृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्वन्तदिन्द्र

तेवशै ॥ ९ ॥ तरणिर्विश्वदर्शतोज्ज्योतिष्कृद
सि सूर्य ॥ विश्वमाभासिरोचनम् ॥ १० ॥
तत्सूर्यस्य देवत्वन्तन्महित्वम्मध्याकर्त्तोर्वि
ततं सञ्जभार ॥ यदेदयुक्तहरितः सधस्थ्या
द्रात्रीवासस्तनुतेसिमस्मै ॥ ११ ॥ तन्मित्र
स्यवरुणस्याभिचक्षेसूर्य्योरूपं कृणुतेद्योरुप
स्थे ॥ अनन्तमन्न्यद्रुशदस्यपाजः कृष्णा
मन्न्यद्धरितः संभरन्ति ॥ १२ ॥ बण्महाँ २ ॥

ऽश्रांसिसूर्य्यबडांदित्यमहाँर॥ऽश्रांसि॥ मह
स्तेसतोमहिमापंनस्यतेद्धादेवमहाँर॥ऽश्रासि
॥१३॥ बट्सूर्य्यश्रवंसामहाँर॥ ऽआसिसत्रा
देवमहाँर॥ऽश्रांसि॥मन्न्हादेवानांमसुर्य्यः
पुरोहितोविभुज्योतिरदांभ्यम् ॥१४॥ श्रा
यन्तऽइवसूर्य्यंविश्श्वेदिन्द्रस्यभक्तत॥ब्वसूनि
जातेजनमानऽश्रोजांसाप्रतिभागन्नदीधिम
॥१५॥अद्यादेवाऽउदितासूर्य्यस्यानिरहंसः

पिपृतानिरंवद्यात् ॥ तन्नोमित्रोवरुणोमामह
न्तामदितिःसिन्धुःपृथिवीऽउतद्यौः ॥१०॥
आकृष्णेनरजंसावर्तमानोनिवेशयंन्नमृत
म्मर्त्यंञ्च ॥ हिरण्ययेनसवितारथेनादेवोयाति
भुवनानिपश्यंन् ॥ ११ ॥

## ❀ अथ पञ्चमोऽध्यायः ❀

ॐनमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः ॥
बाहुब्भ्यामुतेतेनमः ॥ १ ॥ यातेरुद्रशिवात
नूघोरापापकाशिनी॥ तयानस्तन्न्वाशन्तम
यागिरिशन्ताभिचाकशीहि ॥ २ ॥ यामिषु
ङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्र
ताङ्कुरुमाहिᳬसीःपुरुषञ्जगत् ॥३॥ शिवेनव्व
चसात्त्वागिरिशाच्छाव्वदामसि ॥ यथानःस

र्व्वाभिज्जगंदयुक्ष्मᳲसुमनाऽअसंत् ॥ ४ ॥

अध्यंवोचदाधिवक्ताप्प्रथमोदैव्योभिषक् ॥

अहींश्चसर्व्वाञ्जम्भयन्त्सर्व्वाश्चयातुधान्न्यो

धराचीःपरासुव ॥ ५॥ असौयस्ताम्म्रोऽअरु

णऽउतबब्भ्रुᳬसुमङ्गलः ॥ येचैनᳲरुद्राऽ

अभितोदिक्षुश्रिताःसहस्रशोवैषा ॐ हेडऽई

महे ॥६॥ असौयोवसर्प्पतिनीलग्ग्रीवोविलो

हितः ॥ उतैनङ्गोपाऽअदृश्श्रन्नदृश्श्रन्नुदहार्य्यः

सदृष्टोमृडयातिनः ॥७॥ नमोऽस्तुनीलग्रीवा

यसहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्त्वा

नोहन्तेभ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्व

नस्त्वमुभयोरार्त्त्न्योर्ज्याम् ॥ याश्चतेहस्तऽ

इषवःपराताभगवोवप ॥९॥ विज्ज्यन्धनुः

कपर्दिनो विशल्ल्यो बाणवाँ २ ऽउत ॥

अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः

॥ १० ॥ यातेहेतिम्मीढुष्टमहस्तेबभूवते

धनुः ॥ तयास्म्मान्विश्वतस्त्वमयक्ष्मया
परिभुज ॥११॥ परितेधन्न्वनोहेतिरस्मान्न्वृ
णक्तुविश्वतः ॥ अथोयऽइषुधिस्तवारेऽअ
स्म्मन्निधेहितम् ॥१२॥ अवतत्यधनुष्ट्वꣳ
सहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मु
खाशिवोनः सुमनाभव ॥१३॥ नमस्तऽआ
युधायानाततायधृष्ण्णवे ॥ उभाभ्यामुतते
नमोबाहुभ्यान्तवधन्न्वने ॥१४॥ मानोमु

हान्तंमुतमानोऽअर्भंकम्मानऽउक्षंन्तमुत
मानंऽउक्षितम् । मानोंव्वधीःपितरम्मोतमात
रम्मानंः प्प्रियास्तन्न्वोरुद्ररीरिषः ॥ १५॥ मा
नस्तोकेतनंयेमानऽआयुंषिमानोगोषुमानोऽ
अश्वेषुरीरिषः ॥ मानोंव्वीरान्रुद्रभामिनोव्व
धीर्हविष्मंन्तःसदमित्त्वाहवामहे ॥ १६ ॥
नमोहिरंण्यबाहवेसेनान्न्येदिशाञ्चपतंयेन
मोनमोव्वृक्षेब्भ्योहारिकेशेब्भ्यःपशूनाम्पतं

येनमोनमं÷शुष्पिञ्जरायुत्त्विषीमतेपथीना
म्पतयेनमोनमोहरिकेशायोपवीतिनेपुष्टाना
म्पतयेनमोनमोबभ्लुशाय ॥१७॥ नमो
बभ्लुशायं व्व्याधिनेन्नानाम्पतयेनमोनमो
भवस्यंहेत्त्यैजगताम्पतयेनमोनमोरुद्रायां
ततायिनेक्षेत्राणाम्पतयेनमोनमं÷सुतायाहं
न्त्यैवनानाम्पतयेनमोनमोरोहिताय ॥१८॥
नमोरोहितायस्त्थपतयेवृक्षाणाम्पतयेनमो

नमो भुवन्तये वारिवस्कृतायौषधीनाम्पतये न
मो नमो मन्त्रिणे वाणिजाय कक्षाणाम्पतये
नमो नमऽउच्चैर्घोषायाक्रन्दयते पत्तीनाम्पत
ये नमो नमः कृत्स्नायतया ॥ १९ ॥ नमः
कृत्स्नायतया धावते सत्त्वनाम्पतये नमो नमः
सहमानाय निव्याधिनऽआव्याधिनीनाम्पत
ये नमो नमो निषङ्गिणे ककुभाय स्तेनानाम्पत
ये नमो नमो निचेरवे परिचरायारण्यानाम्पत

येनमोनमोवञ्चतें२०नमोवञ्चतेंपरिवञ्चतें

रुद्रा० स्तायूनाम्पतयेनमोनमोंनिषङ्गिणंऽइषुधिम अ० ५

तेतस्कराणाम्पतयेनमो नमंः सृकायिभ्यो

४२ जिघांᳬसद्भ्योमुष्णताम्पतयेनमोनमोऽसि

मद्भ्योनक्तञ्चरंद्भ्योविकृन्तानाम्पतयेनमं

॥२१॥नमंऽउष्णीषिणे।गिरिचरायंकुलुञ्चा

नाम्पतयेनमोनमंऽइषुमद्भ्योधन्वायिभ्यं ४२

श्चवोनमोनमंऽआतन्वानेभ्यंःप्रतिदधाने

द्रा० ४४

भ्यश्च वो नमो नमः आयच्छद्भ्योऽस्यद्भ्य
श्च वो नमो नमो विसृजद्भ्यः ॥२२॥ नमो विसृ
जद्भ्यो विद्ध्यद्भ्यश्च वो नमो नमः स्वपद्भ्यो
जाग्रद्भ्यश्च वो नमो नमः शयानेभ्य आ
सीनेभ्यश्च वो नमो नमस्तिष्ठद्भ्यो धावद्भ्य
श्च वो नमो नमः सभाभ्यः ॥२३॥ नमः सभा
भ्यः सभापतिभ्यश्च वो नमो नमो श्वेभ्योऽश्व
पतिभ्यश्च वो नमो नमः आव्याधिनीभ्यो वि

विद्ध्यन्तीभ्यश्च वो नमो नम ऽउगणाभ्यस्तृ
ꣳहतीभ्यश्च वो नमो नमो गणेभ्यः ॥२४॥
नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रा
तेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो
गृत्सपतिभ्यश्च वो नमो नमो विरूपेभ्यो वि
श्वरूपेभ्यश्च वो नमो नमः सेनाभ्यः ॥२५॥
नमः सेनाभ्यः सेनानिभ्यश्च वो नमो नमो र
थिभ्यो ऽअरथेभ्यश्च वो नमो नमः क्षत्तृ

भ्यः सङ्ग्रहीतृभ्यंश्चवो नमो नमो महद्भ्यो
ऽअर्भकेभ्यंश्चवो नमः ॥ २६ ॥ नमु
स्तक्षभ्यो रथकारेभ्यंश्चवो नमो नमः कु
लालेभ्यः कर्मारेभ्यश्चवो नमो नमो निषादे
भ्यः पुञ्जिष्ठेभ्यश्चवो नमो नमः श्वनिभ्यो
मृगयुभ्यंश्चवो नमो नमः श्वभ्यः ॥ २७॥
नमः श्वभ्यः श्वपतिभ्यश्चवो नमो नमो भवा
यंचरुद्रायचनमः शर्वायंचपशुपतयेचनमो

नीलंग्ग्रीवाय चशितिकण्ठाय च नमः कपर्दिने

॥ २८ ॥ नमः कपर्दिने च व्युप्तकेशाय

च नमः सहस्राक्षाय च शतधन्न्वने च नमो

गिरिशयाय च शिपिविष्टाय च नमो मीढुष्टमा

य चेषुमते च नमो ह्रस्वाय ॥ २९ ॥ नमो

ह्रस्वाय च वामनाय च नमो बृहते च वर्षीयसे च

नमो वृद्धाय च सवृधे च नमो ग्र्याय च प्रथमाय

च नमः आशवे ॥ ३० ॥ नमः आशवे चाजि

रायं च नमः शीघ्र्याय च शीभ्याय च नम ऊ

र्म्यांय चावस्वन्याय च नमो नादेयाय च द्वी

प्याय च ॥ ३१ ॥ नमो ज्येष्ठाय च कनिष्ठा

यं च नमः पूर्वजाय चापरजाय च नमो मध्यमा

यं चापगल्भाय च नमो जघन्याय च बुध्न्या

य च नमः सोभ्याय ॥ ३२ ॥ नमः सोभ्याय

च प्रतिसर्याय च नमो याम्याय च क्षेम्याय



च नमः श्लोक्याय चावसान्याय च नम उर्व

र्व्यायचखल्ल्यायचनमोवन्न्याय ॥ ३३ ॥
नमोवन्न्यायचाकक्ष्यायचनमः श्रवायचप्र
तिश्रवायचनमः ऽआशुषेणायचाशुरथायचन
मःशूरायचावभेदिनेचनमोबिल्मिने ॥ ३४ ॥
नमोबिल्मिनेचकवचिनेचनमोवर्म्मिणेच
वरूथिनेचनमः श्रुतायचश्रुतसेनायचनमो
दुन्दुभ्यायचाहनन्यायचनमोधृष्णवे ॥ ३५ ॥
नमोधृष्णवेचप्रमृशायचनमोनिषङ्गिणेच

षुधिमतेचनमंस्तीक्ष्णेषवेचायुधिनेचनमं÷
स्वायुधायचासुधन्न्वनेच ॥ ३६ ॥ नमहस्स्रु
त्त्यायचपत्थ्यायचनमहकाट्यायचनीप्प्याय
चनमहकुल्ल्यायचासरस्स्यायचनमोनादेया
यचवैशन्तायचनमहकूप्प्याय ॥३७॥ नमह
कूप्प्यायचावट्यायचनमोवीध्य्यायचातप्प्या
यचनमोमेध्याचाविद्युत्यायचनमोवर्षघ्यांय
चावर्षघ्यायचनमोवात्याय ॥ ३८॥ नमो

व्रात्यायचेरण्म्यायचनमोव्वास्तव्व्यायचव्वा
स्तुपायचनमः सोमायचरुद्रायचनमस्ताम्म्रा
यचारुणायचनमः शङ्गवे ॥ ३९ ॥
नमः शङ्गवेचपशुपतयेचनमऽउग्ग्रायचभी
मायचनमोग्ग्रेवधायचदूरवधायचनमोहन्त्रे
चहनीयसेचनमोव्वृक्षेब्भ्योहरिकेशेब्भ्योनम
स्ताराय ॥ ४० ॥ नमः शम्भवाय । चम
योभवायचनमः सङ्करायचमयस्करायच

रुद्रा० नमः॑ शि॒वाय॑ चा शि॒वत॑राय च ॥४१॥ नम॒ऽ
पा॒र्य्या॑य । चा वा॒र्य्या॑य च॒ नम॑ः प्र॒तर॑णाय अ० ५
५२ चो॒त्तर॑णाय च॒ नम॒स्ती॒र्थ्या॑य च॒ कूल्या॑य च॒
नम॒ऽशष्प्या॑य च॒ फेन्या॑य च॒ नम॑ः सिक॒त्या॑य
॥ ४२ ॥ नम॑ः सिक॒त्या॑य च प्रवा॒ह्या॑य च॒
नम॑ः किꣳशि॒ला॑य च क्ष॒य॒णाय॑ च॒ नम॑ः कप॒
र्द्दिने॑ च पु॒लस्त॑ये॑ च॒ नम॑ऽइरि॒ण्या॑य च प्रप॒थ्या॑

य च॒ नमो॑ व्रज्या॑य ॥४३॥ नमो॒ व्रज्या॑य च॒ गो ५४

० 
ष्ठ्याय चनमस्तल्प्याय चगेह्याय चनमोहृद
य्याय चनिवेष्प्याय चनमꣳकाट्याय चगह्वरे अ० ५
५२ ष्ठाय चनमꣳशुष्क्याय॥४४॥नमꣳशुष्क्याय
चहरित्याय चनमः पाꣳसव्याय चरजस्याय
चनमोलोप्याय चोलप्याय चनमऽऊर्व्याय
चसूर्व्याय चनमः पर्णाय ॥४५॥ नमः पर्णा
य चपर्णशदाय चनमऽउद्गुरमाणाय चाभि
घ्नते चनमऽआखिदते चप्रखिदते चनमऽइ ५३

षुकृद्भ्यो॑धनुष्कृद्भ्य॑श्श्च॒वो॒नमो॒नमो॑वः कि
रिके॒भ्यो॑दे॒वाना॒ᳪ हृद॑येभ्यो॒नमो॑वि॒चिन्न्व
त्के॒भ्यो॒नमो॑वि॒क्षि॒ण॒त्के॒भ्यो॒नमऽआनिर्ह॒
ते॒भ्यः ॥४६॥ द्रापे॒ऽअन्ध॑सस्पते॒दरि॑द्रनी
ल॑लोहित ॥ आसाम्प्र॒जाना॑मे॒षाम्पशू॒नाम्मा
भेर्म्मारोङ्मोच॒नः किञ्च॒नाम॑मत् ॥ ४७ ॥
इ॒मा रु॒द्राय॑। त॒वसे॑कप॒र्द्दिने॑क्षयद्वी॑राय॒प्प्रभ॑
रामहेम॒तीः ॥ यथा॒शम॑स॑द्द्वि॒पदे॒चतु॑ष्पदे

विश्श्वंम्पुष्ष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥४८॥

यातेरुद्द्रशिवातनूश्शिवाविश्श्वाहाभेषजी ॥

शिवारुतस्यभेषजीतयानोमृडजीवसे॥४९॥

परिनोरुद्द्रस्यहेतिर्व्वृणक्तुपरित्त्वेषस्यदुर्म्मतिः

रघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्ष्वमी

ढ्वस्तोकायतनयायमृड ॥ ५० ॥ मीढुष्ष्टम

शिवतम । शिवोनः सुमनाभव ॥ परमेवृक्षऽ

आयुधन्निधायकृत्तिंव्वसानऽआचरपिनाकं

म्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहित
 नमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रꣳहेत 
 योन्न्यमस्म्मन्निवपन्तुताः ॥ ५२ ॥ सहस्रा
णिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशा
नोभगवःपराचीनामुखाकृधि ॥ ५३ ॥ असं
ख्यातासहस्राणि। येरुद्राऽअधिभूम्म्याम्। तेषा
ꣳसहस्रयोजनेवधन्न्वानितन्न्मसि ॥५४॥
अस्मिन्न्महत्त्यर्णवेन्तरिक्षेभवाऽअधि। तेषाꣳ 

सहस्रयोजनेवधन्न्वानितन्न्मसि॥५५॥ नीलं
ग्ग्रीवाꣳशितिकण्ठादिवꣳ रुद्राऽउपश्श्रिताꣳ॥
५७ तेषाꣳसहस्रयोजनेवधन्न्वानितन्न्मसि॥५६॥
नीलंग्ग्रीवाꣳशितिकण्ठाꣳशर्व्वाअधःक्षमाच
राः॥ तेषाꣳ सहस्रयोजनेवधन्न्वानितन्न्म
सि॥५७॥ येव्वृक्षेषु। शष्पिञ्जरानीलं
ग्ग्रीवाव्विलोहिताꣳ॥ तेषाꣳसहस्रयोजनेव
धन्न्वानितन्न्मसि॥५८॥ येभूतानामधिप ५७

तयोर्व्विशिखासं÷कपर्द्दिनं÷ ॥ तेषांꣳसहस्र
योजनेवधन्न्वांनितन्न्मासि ॥ ५९ ॥ येपथा
म्पंथिरक्षंयऽऐजवृदाऽआयुर्न्युधं÷॥ तेषांꣳ
सहस्रयोजनेवधन्न्वांनितन्न्मासि॥ ६० ॥ येती
र्थानि । प्रचरंन्तिसृकाहंस्तानिषङ्गिणां÷ ॥
तेषांꣳसहस्रयोजनेवधन्न्वांनितन्न्मासि॥ ६१ ॥
येन्नेषु । व्विविद्धूयंन्तिपात्रैषुपिबंतोजनान् ॥
तेषांꣳसहस्रयोजनेवधन्न्वांनितन्न्मासि॥ ६२ ॥

यऽएतावन्तश्चभूयाᳪंसश्चदिशोरुद्राव्वित अ० ५

रुद्रा० स्थिरे ॥ तेषाᳪंसहस्रयोजनेवधन्न्वानित

५६ न्न्मसि ॥६३॥ नमोऽस्तु । रुद्द्रेब्भ्योयेदिवि

विर्येषांव्वर्षमिषवः ॥ तेब्भ्योदशप्प्राचीर्दशं

दक्षिणादशप्प्रतीचीर्द्दशोदीचीर्द्दशोर्द्ध्वाः ॥

तेब्भ्योनमोऽअस्तुतेनोऽवन्तुतेनोमृडयन्तुते

यन्द्विष्ष्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदद्ध्मः

॥६४॥ नमोऽस्तु । रुद्द्रेब्भ्योयेन्तरिक्षेयेषां ५८

वातऽइषवः ॥ तेभ्योदशप्राचीर्द्दशदाक्षि

णादशप्रतीचीर्द्दशोदीचीर्द्दशोर्ध्वाः॥ ते

भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेय

न्द्विष्मोयश्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः॥

॥६५॥ नमोऽस्तु । रुद्द्रेभ्योयेपृथिव्यांये

षामन्नमिषवः॥ तेभ्योदशप्राचीर्द्दशदाक्षि

णादशप्रतीचीर्द्दशोदीचीर्द्दशोर्ध्वाः ॥ ते

भ्योनमोऽअस्तुतेनोऽवन्तुतेनोमृडयन्तुतेय
न्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः
॥ ६६ ॥ इति पञ्चमोऽध्यायः ।

❀ अथ षष्ठोऽध्यायः ❀

ॐ व्वयꣳ सोमव्व्रतेतवमनंस्तनूषुबिभ्रतꣳ ।।
प्रजावंन्तꣳसचेमहि ॥१॥ एषतें । रुद्द्रभा
गꣳसुहस्वस्राम्बिकयातञ्जुंषस्वस्वाहैषतेंरुद्द्र
भागऽआखुस्तेंपशुः ॥२॥ अवंरुद्द्रमंदीमुह्य

---

कार्यभेदेन अभिषेकद्रव्याणि — जलेन वृष्टिमाप्नोति व्याधिशान्त्यै कुशोदकैः । दध्ना च पशुकामाय श्रिया इक्षुरसेन च ॥ मध्वाज्येन धनार्थी स्यान्मुमुक्षुस्तीर्थवारिणा । पुत्रार्थी पुत्रमाप्नोति पयसां चाभिसेचनात् ॥ बन्ध्या वा काकबन्ध्या वा मृतवत्सा च याऽङ्गना । सद्यः पुत्रमवाप्नोति पयसां चाभिषेचनात् ॥ ज्वरप्रकोप-

वंदेवन्त्र्यंम्बकम् ॥ यथानोव्वस्यंसस्करद्यथा

नःश्रेयंसस्करद्यथानोव्ययवसाययात् ॥ ३ ॥



भेषजमसिभेषजङ्गवेऽश्वायपुरुषायभेषजम् ।

सुखम्मेषायमेष्ष्यै ॥ ४ ॥ त्र्यंम्बकंय्यजामहे

हेसुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिवबन्ध

नान्मृत्योर्म्मुक्षीयमामृतात् । त्र्यंम्बकंय्य

शान्त्यर्थं जलधारा शिवप्रिया । घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम् ॥ तदा

वंशस्य विस्तारो जायते नात्र संशयः । प्रमेहरोगशान्त्यर्थं प्राप्नुयात् मानसेप्सितम् ॥

जामहेसुगन्धिम्पुंतिवर्द्धनम् ॥ उर्व्वारुकमिव

बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ५ ॥ एतत्ते ।

रुद्द्रावसन्तेनपरोमूजवतोतीहि ॥ अवततध

न्न्वापिनाकावसःकृत्तिवासाऽअहिंसन्नःशि

वोतीहि ॥६॥ त्र्यायुषञ्जमदग्नेःकश्यपस्य

त्र्यायुषम् ॥यद्देवेषुत्र्यायुषन्तन्नोऽअस्तुत्र्यायु

केवलदुग्धधारा च तदा कार्या विशेषतः । शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत् ॥

श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शङ्करस्य च । सार्षपेणैव तैलेन शत्रुनाशो भवेदिह ॥



मधुना यक्ष्मराजोऽपि गच्छेद्वै शिवपूजनात् । पापक्षयार्थी मधुना निर्व्याधिः

षम् ॥७॥ शिवोनामासिस्वधितिस्तेपितान-
मस्तेऽअस्तुमामाहि॥सीः ॥ निवर्त्तयाम्म्या
युषेन्नाद्यायप्प्रजननायरायस्प्पोषायसुप्प्रजा
स्त्वायसुवीर्य्याय ॥८॥ इति षष्ठोऽध्यायः ।

---

सर्पिषा तथा ॥ जीवनार्थी तु पयसा श्रीकामोक्षुरसेन वै । पुत्रार्थी शर्करायास्तु रसेनार्च्चेच्छिवं तथा । महालिङ्गाभिषेकेण सुप्रीतः शङ्करो मुदा ॥

## ❀ अथ सप्तमोऽध्यायः ❀

ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ॥ सासह्वाँश्चाभियुग्वा च विक्षिपः स्वाहा ॥१॥ अग्निᳬं हृदयेनाशनिᳬं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ॥ शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥२॥ उग्रँल्लोहितेन । मित्रᳬं सौव्रत्येन

रुद्रन्दौर्ब्बृत्त्येनेन्द्रम्प्रक्क्रीडेनमरुतोबलेनसा

ध्ध्यान्प्रमुदा। भवस्यकण्ठ्यंᳪरुद्रस्यान्तᳪ



पार्श्व्यम्महादेवस्ययकृच्छर्व्वस्यवनिष्ठुऽपशु

पतेᳪपुरीतत्॥३॥ लोमभ्यःस्वाहा॥ लोमभ्यःᳪ

स्वाहा। त्वचे स्वाहा। त्वचे स्वाहा। लोहिताय

स्वाहा। लोहिताय स्वाहा। मेदोभ्यःᳪ स्वाहा।

मेदोभ्यःᳪस्वाहा। माᳪसेभ्यःᳪस्वाहा। माᳪ

सेभ्यःᳪस्वाहास्नावभ्यःᳪस्वाहास्नावभ्यःᳪ

स्वाहा। स्त्थब्भ्यः स्वाहास्त्थब्भ्यः स्वाहा मज्ज
ब्भ्यः स्वाहा मज्जब्भ्यः स्वाहा ॥ रेतसे स्वाहा पा
यवे स्वाहा ॥४॥ आयासाय स्वाहा । प्प्रायासाय
स्वाहा संय्यासाय स्वाहा व्वियासाय स्वाहोद्या
साय स्वाहा ॥ शुचे स्वाहा शोचते स्वाहा शोच
मानाय स्वाहा शोकाय स्वाहा ॥५॥ तपसे स्वा-
हा । तप्प्यते स्वाहा तप्प्यमानाय स्वाहा तप्ता





य स्वाहा घर्म्माय स्वाहा ॥ निष्कृत्यै स्वाहा प्रा

यंश्चित्त्यैस्वाहां भेषजायु स्वाहां ॥८॥ सुमा
युस्वाहान्तंकायु स्वाहां मृत्यवे स्वाहां ब्रह्मणे
स्वाहांब्रह्महुत्यायैस्वाहां विश्वेभ्योदेवेभ्युः
स्वाहाद्यांपृथिवीभ्याऽंस्वाहां ॥७॥

इति सप्तमोऽध्यायः ।

---

अथाष्टमोऽध्यायः

ॐ वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रवश्च मे श्रुतिश्च मे ज्योतिश्च मे स्वश्च मे यज्ञेन कल्पन्ताम् ॥१॥ प्राणश्च मेऽपानश्च मे व्यानश्च मेऽसुश्च मे चित्तञ्च म आधीतञ्च मे वाक्च मे मनश्च मे चक्षुश्च मे श्रोत्रञ्च मे दक्षश्च मे बलञ्च मे यज्ञेन कल्पन्ताम् ॥२॥ ओजश्च मे सहश्च मऽ

आत्माचमेतनूश्चमेशर्म्मचमेवर्म्मचमेङ्गानि
चमेस्थीनिचमेपरूᳬंषिचमेशरीराणिचमऽ
आयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ३ ॥
ज्यैष्ठ्यञ्च। मऽआधिपत्त्यञ्चमेमन्न्युश्चमे
भामश्चमेमश्चमेम्भश्चमेजेमाचमेमहिमाच
मेवरिमाचमेप्रथिमाचमेवर्षिमाचमेद्राघि
माचमेवृद्धञ्चमेवृद्धिश्चमेयज्ञेनकल्पन्ताम्
॥४॥(न०)सत्त्यञ्च। मेश्रद्धाचमेजगच्चमे

धनंञ्च मे व्विश्श्वंञ्च मे महश्च मे क्क्रीडा च मे मोदश्च
मे जातञ्च मे जनिष्ष्यमाणञ्च मे सूक्तञ्च मे सु
कृतञ्च मे यज्ञेन कल्प्पन्ताम् ॥५॥ ऋतञ्च मेऽमृ
तञ्च मे यक्ष्मञ्च मेनामयच्च मे जीवातुश्च दीर्घा
युत्वञ्च मेनमित्रञ्च मेऽभयञ्च मे सुखञ्च मे
शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेन कल्प-
न्ताम् ॥६॥ यन्ता च मे धर्त्ता च मे क्षेमश्च मे धृतिं
श्च मे व्विश्श्वञ्च मे महश्च मे संविच्च मे ज्ञात्रञ्च मे

रुद्रा० सूश्च मे प्रसूश्च मे सीरञ्च मे लयश्च मे यज्ञेन अ० ८
कल्पन्ताम् ॥ ७ ॥ शञ्च मे मयश्च मे प्रि
७३ यञ्च मेऽनुकामश्च मे कामश्च मे सौमनसश्च मे
भगश्च मे द्रविणञ्च मे भद्रञ्च मे श्रेयश्च मे वसीय
श्च मे यशश्च मे यज्ञेन कल्पन्ताम् ॥८॥(न०)॥
ऊर्क्क्च मे सूनृता च मे पयश्च मे रसश्च मे घृतञ्च मे
मधु च मे सग्धिश्च मे सपीतिश्च मे कृषिश्च मे वृष्टि
श्च मे जैत्रञ्च मऽऔद्भिद्यञ्च मे यज्ञेन कल्पन्ताम् ७३

रुद्रा० ॥ ९ ॥ रयिश्च मे रायश्च मे पुष्टञ्च मे पुष्टिश्च मे अ ॥
विभु च मे प्रभु च मे पूर्णञ्च मे पूर्णतरञ्च मे कुयवं
७४ च मे क्षितञ्च मेऽन्नञ्च मे क्षुच्च मे यज्ञेन कल्पन्ताम्
॥ १० ॥ वित्तञ्च मे वेद्यञ्च मे भूतञ्च मे भविष्यच्च मे
सुगञ्च मे सुपथ्यञ्च मऽऋद्धञ्च मऽऋद्धिश्च
मे क्लृप्तञ्च मे क्लृप्तिश्च मे मतिश्च मे सुमतिश्च मे य-
ज्ञेन कल्पन्ताम् ॥ ११ ॥ व्रीहयश्च । मे यवाश्च मे
माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे ७५

प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम् ॥१२॥ (न०) अश्मा च । मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥१३॥ अग्निश्च मऽआपश्च मे वीरुधश्च मऽओषधयश्च मे कृष्टपच्याश्च मेऽकृष्टपच्याश्च मे ग्रा

न्याश्चमेपशवऽआरण्याश्चमेवित्तञ्चमेवि
त्तिश्चमेभूतञ्चमेभूतिश्चमेयज्ञेनकल्पन्ताम्
॥१४॥ वसुंच। मेव्वसतिश्चमेकर्म्मचमेशक्ति
श्चमेर्थश्चमऽएमश्चमऽइत्याचमेगातिश्चमेय
ज्ञेनकल्पताम् ॥१५॥ ( न० ) अग्निश्च ।
मऽइन्द्रश्चमेसोमश्चमऽइन्द्रश्चमेसविताच
मऽइन्द्रश्चमेसरस्वतीचमऽइन्द्रश्चमेपूषाच
मऽइन्द्रश्चमेबृहस्पतिश्चमऽइन्द्रश्चमे

यज्ञेनंकल्पन्ताम्॥१६॥मित्रश्चमे ऽइन्द्रश्च

मेवरुणश्चमे ऽइन्द्रश्चमेधाताचमे ऽइन्द्रश्च

मेत्त्वष्टाचमे ऽइन्द्रश्चमेमरुतश्चमे ऽइन्द्रश्च

मेविश्वेचमेदेवा ऽइन्द्रश्चमेयज्ञेनंकल्पन्ताम्

॥१७॥पृथिवीचमे ऽइन्द्रश्चमे ऽन्तरिक्षञ्चमे ऽइ

न्द्रश्चमे द्यौश्चमे ऽइन्द्रश्चमेसमाश्चमे ऽइन्द्रश्च

मेनक्षत्राणिचमे ऽइन्द्रश्चमेदिशश्चमे ऽइन्द्रश्च

मेयज्ञेनंकल्पन्ताम ॥१८॥ [न०] अंशुश्चमे।

मेरश्मिश्च मे दाभ्यश्च मेधिपतिश्च मऽउपाँ
शुश्च मेऽन्तर्यामश्च मऽऐन्द्रवायवश्च मे मैत्राव
रुणश्च मऽआश्विनश्च मे प्रतिप्रस्थानश्च मे शु
क्रश्च मे मन्थी च मे यज्ञेन कल्पन्ताम्॥१९॥
आग्रयणश्च मे वैश्वदेवश्च मे ध्रुवश्च मे वैश्वानर
श्च मऽऐन्द्राग्नश्च मे महावैश्वदेवश्च मे मरुत्व
तीयाश्च मे निष्केवल्यश्च मे सावित्रश्च मे सार
स्वतश्च मे पात्नीवतश्च मे हारियोजनश्च मे य

ज्ञेनकल्पन्ताम् ॥२०॥ स्रुचश्च । मे चमसाश्च मे वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्च मऽआधवनीयश्च मे वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेनकल्पन्ताम् ॥२१॥ (न०) अग्निश्च । मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मेऽङ्गुलयः शक्वरयो दिशश्च मे यज्ञेनक

ल्पन्ताम् ॥२२॥ व्व्रतञ्च मऽऋतवश्च मेत
पश्च मेसंवत्सरश्च मेऽहोरात्रेऽऊर्व्वष्ठीवेबृहद्रथ
न्तरेचमेयज्ञेनकल्पन्ताम् ॥२३॥ [न०]
एका च। मेतिस्रश्च मेतिस्रश्च मेपञ्चचमेपञ्च
चमेसप्तचमेसप्तचमेनवचमेनवचमऽएका
दशचमऽएकादशचमेत्रयोदशचमेत्रयोद
शचमेपञ्चदशचमेपञ्चदशचमेसप्तदशच
मेसप्तदशचमेनवदशचमेनवदशचमऽएक

विंꣳ॰शतिश्चमएकोंविꣳ॰ शतिश्चमेत्रयोंविꣳ॰
रुद्रा० शतिश्चमेत्रयोंविꣳ॰ शतिश्चमेपञ्चंविꣳ॰ शति अ० ८
८१ श्चमेपञ्चंविꣳ॰ शतिश्चमेसप्तविंꣳशतिश्चमे
सप्तविंꣳ॰शतिश्चमेनवंविꣳ॰शतिश्चमेनवंविꣳ॰
शतिश्चमऽएकंत्रिꣳ॰शच्चमऽएकंत्रिꣳशच्चमे
त्रयंस्त्रिꣳ॰शच्चमेयज्ञेनकल्पन्ताम्॥२४॥(न०)
६ चतंस्रश्च। मेष्टौचमेष्टौचमेद्वादशचमेद्वादश
मेषोडंशचमेषोडंशचमेविꣳ॰शतिश्चमेविꣳ॰ ८१

शतिश्चमे चतुर्विꣳ॰ शतिश्चमे चतुर्विꣳ॰ शतिश्च
 मेऽष्टाविꣳ॰ शतिश्चमेऽष्टाविꣳ॰ शतिश्चमे द्वात्रिꣳ 
 शच्चमे द्वात्रिꣳशच्चमे षट्त्रिꣳ॰ शच्चमे षट्त्रिꣳ
शच्चमे चत्वारिꣳ शच्चमे चत्वारिꣳ शच्चमे चतु
श्चत्वारिꣳ॰ शच्चमे चतुश्चत्वारिꣳ॰ शच्चमेऽष्टाचत्वा
रिꣳ॰ शच्चमे यज्ञेन कल्पन्ताम् ॥२५॥ (न०)
ऽयविश्च । मेत्र्यवी चं मे दित्यवाट् चं मे दित्यौ
ही चं मे पञ्चाविश्च मे पञ्चावी चं मे त्रिवत्सश्च मे 

 

त्रिवत्साचमेतुर्य्यवाट्चमेतुर्य्यौहीचमेयज्ञेनं
कल्पन्ताम् ॥२६॥ पष्ठवाट्चं । मेपष्ठौही
चंम ऽउक्षाचंमेव्वशाचंम ऽऋषभश्चंमेव्वेहच्चं
मेनड्वाँश्चमेधेनुश्चमेयज्ञेनंकल्पन्ताम्॥२७॥
(न०) व्वाजायस्वाहा । प्रसवायस्वाहाऽपि
जायस्वाहाक्रतवेस्वाहाव्वसवेस्वाहाहर्पतये
स्वाहान्हेमुग्ग्धायस्वाहामुग्ग्धायव्वैन६·शिना
यस्वाहाव्विनर्ठं०शिनं ऽआन्त्यायनायस्वाहा

न्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहा
धिपतयेस्वाहाप्रजापतयेस्वाहा ॥ इयन्तेरा
ण्मित्रायसन्तासियमनऽऊर्ज्जैत्वावृष्टयैत्वा
प्रजानान्त्वाधिपत्याय ॥ २८ ॥ आयुर्यज्ञे
नंकल्पताम्प्राणोयज्ञेनंकल्पताञ्चक्षुर्यज्ञे
नंकल्पताᳪं श्रोत्रंयज्ञेनंकल्पताम्वाग्यज्ञे
नंकल्पताम्मनोयज्ञेनंकल्पतामात्मायज्ञेनं

कल्पताम्ब्रह्मायज्ञेनंकल्पताञ्ज्योतिर्यज्ञेनं

कल्पता ७ स्वष्यज्ञ्ञेनकल्पताम्पृष्ठष्यज्ञ्ञे

रुद्रा० नंकल्पतांयुज्ञोयुज्ञेनंकल्पताम् ॥ स्तोमं ५०८

८५ श्चयजुंश्चऽऋक्वचुसामंचबृहच्चंरथन्तरञ्च ।

स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापंतेःप्प्रु

जाऽअंभूमवेट्स्वाहा ॥ २१ ॥

## अथ नवमोऽध्यायः

ॐ ऋचं॑ वाचम्प्रप॑द्ये॒ मनो॒ यजु॑ःप्रप॑द्ये॒ साम॑ प्राणम्प्रप॑द्ये॒ चक्षु॑ः श्रोत्र॒म्प्रप॑द्ये ॥ वागोजः॑ स॒हौजो॒ मयि॑ प्राणापा॒नौ ॥ १ ॥ यन्मे॑ छि॒द्रञ्चक्षु॑षो॒ हृद॑यस्य॒ मन॑सो॒ वाति॑तृण्णं॒ बृह॒स्पति॑र्मे॒ तद्द॑धातु ॥ शन्नो॑ भवतु॒ भुव॑नस्य॒ यस्पति॑ः ॥२॥ भूर्भुवः॒ स्वः॑ । तत्स॑वितुर्वरे॑ण्य॒म्भर्गो॑ दे॒वस्य॑ धीमहि ॥ धियो॒ यो नः॑ प्रचोद

रुद्रा० यांत् ॥३॥ कयोनश्चित्रऽआभुंवदूतीसदावृ

८७ धुःसखा । कयाशचिंष्ठयावृता॥४॥ कस्त्वो

सत्योमदांनाम्मꣳहिंष्ठोमत्सदन्धंसः॥दृढा

चिदारुजेव्वसु॥५॥अभीषुणःसखींनामविता

जंरितृणाम् ॥ शतम्भंवास्यूतिभिंः॥३॥ क

यात्वन्नंऽऊत्याभिप्रमंन्दसेवृषन्॥ कयांस्तो

तृभ्यऽआभंर।७।इन्द्रोविश्श्वंस्यराजति॥श

न्नोंऽअस्तुद्विपदेशञ्चतुंष्पदे ॥ ८ ॥ शन्नोंमित्र अ० ६

शव्वंरुंग्गुःशन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रबृह
स्पतिःशन्नोव्विष्णुरुरुक्रमः ॥ ९ ॥ शन्नोव्वा
तः पवताᳪंशन्नस्तपतुसूर्य्यः ॥ शन्नः कनि
क्रदद्देवः पर्जन्न्योऽअभिवर्षतु ॥ १० ॥ अहानिश
म्भवन्तुनः शᳪंरात्रीः प्रतिधीयताम् ॥ शन्नऽ
इन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणारा
तहव्व्या ॥ शन्नऽइन्द्रापूषणाव्वाजसातौशमि
न्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नोदेवी

रभिष्टयऽआपोभवन्तुपीतये॥ शंय्योरभिस्त्र
रु.। वन्तुनः ॥ १२ ॥ स्योनापृथिवि । नोभवा अ. ६
८६ नृक्षरानिवेशनी ॥ यच्छानःशर्म्मसप्रथाः
॥१३॥ आपो हि । ष्ठामंयो भुवस्तानंऽऊर्जेद
धातन ॥ महेरणायचक्षसे ॥१४॥ योवः
शिवतंमोरसस्तस्यंभाजयतेहनः ॥उशतीरि
वमातरः ॥ १५ ॥ तस्माऽअरंङ्गमामवोय
स्यक्षयांयजिन्वंथ ॥ आपोंजनयंथाचनः ८९

रुद्रा० ॥ १३ ॥ द्यौःशान्तिरन्तरिक्षꣳशान्तिःपृ
६० थिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ अ० ९
वनस्प्पतयःशान्तिर्व्विश्वेदेवाःशान्तिर्ब्रह्मशा
न्तिःसर्व्वꣳशान्तिःशान्तिरेवशान्तिःसामा
शान्तिरेधि ॥ १७ ॥ दृतेदृꣳहमामित्रस्य
माचक्षुषासर्व्वाणिभूतानिसमीक्षन्ताम् ॥ मि
त्रस्याहञ्चक्षुषासर्व्वाणिभूतानिसमीक्षे ॥
मित्रस्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳ ६

हंमा ॥ ज्योक्कैसुन्द्दशीजीव्व्यासंज्ज्योक्कैस

न्द्दशीजीव्व्यासम् ॥ १९॥ नमंस्तेहरंसेशो

चिषेनमंस्तेऽअस्त्वर्चिषे॥अन्न्यांस्तेऽअस्म्म

त्तंपन्तुहेतयं÷पावकोऽअस्म्मब्भ्यंॅ०शिवोभं

व ॥ २० ॥नमंस्ते । अस्तुव्विद्युतेनमंस्तेस्त

नयित्नवे ॥ नमस्तेभगवन्नस्तुयतं÷स्व÷समी

हंसे ॥ २१ ॥ यतोयतं÷समीहंसेततोनोऽअभं

यङ्कुरु॥ शन्न÷कुरुप्प्रजाब्भ्योभंयन्न÷पशु

द्रहा० भ्यं÷ ॥ २२ ॥ सुमित्रियानऽआपऽओषधयः
सन्तुदुर्म्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टि अ ६
६२ यञ्चवयन्द्विष्मः ॥ २३ ॥ तच्चक्षुर्देवहित
म्पुरस्ताच्छुक्रमुच्चरत् ॥ पश्येमशरदः÷श
तञ्जीवेमशरदः÷शतꣳ शृणुयामशरदः÷शत
म्प्रब्रवामशरदः÷शतमदीनाः स्यामशरदः÷
शतम्भूयश्च शरदः÷शतात् ॥ २४ ॥

-: इति शान्त्यध्यायः :-

## ❀ अथ शान्तिमन्त्राः ❀

रु०१।१० ॐस्वस्तिनऽइन्द्रोवृद्धश्रवाःस्वस्तिनः अ०६

१३ पूषाविश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टने

मिःस्वस्तिनोबृहस्पतिर्दधातु ॥ १ ॥ पयः

पृथिव्यांपयऽओषधीषुपयोदिव्यन्तरिक्षेप

योधाः॥पयस्वतीःप्रदिशःसन्तुमह्यम्॥२॥

विष्णोरराटमसि विष्णोःश्नप्त्रेस्थो वि १३

ष्णोःस्यूरसिविष्णोर्ध्रुवोऽसि॥ वैष्णवमसि

सि विष्णवे त्वा ॥३॥ अग्निर्देवता वातो देव-
 ता सूर्यो देवता चन्द्रमा देवता वसवो देवता रु- 
 द्रा देवता ऽऽदित्या देवता मरुतो देवता विश्वेदेवा
देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता
॥ ४ ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै
नमो नमः। भवे भवे नातिभवे भवस्व मां भवो-
द्भवाय नमः ॥५॥ वामदेवाय नमो ज्येष्ठाय 
नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः

कलाविकरणाय नमो बलविकरणाय नमो
बलाय नमो बलप्रमथनाय नमः सर्वभूतदम
नाय नमो मनोन्मनाय नमः ॥६॥ अघो
रेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः
सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥७॥
तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥८॥ ईशानः सर्व
विद्यानामीश्वरः सर्वभूतानां ब्रह्माधिप

तिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदा
 शिवोम् ॥ ९ ॥ ॐशिवोनामासिस्वधिति 
 स्तेपितानमस्तेऽअस्तुमामाहिᳪसीः ॥ नि
वर्त्तयाम्म्यायुषेन्नाद्यायप्रजननायरायस्पोषा
यसुप्रजास्त्वायसुवीर्य्याय ॥ १० ॥ विश्वा
निदेवसवितर्दुरितानिपरासुव ॥ यद्भद्रन्त
न्नऽआसुव ॥ ११ ॥ द्यौः शान्तिरन्तरिक्षᳪ शा
न्तिः पृथिवीशान्तिरापः शान्तिरोषधयः 

शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सामा शान्तिरेधि ॥ १२ ॥

अनेन रुद्राभिषेककर्मणा भवानीशङ्करः प्रीयतां न मम इति ।

---

# * अथ शान्तिसारोक्तपार्थिवपूजनम् *

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्। सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ वन्दे महेशं सुरसिद्धसेवितं भक्तैः सदा पूजितपादपद्मम् । ब्रह्मेन्द्रविष्णुप्रमुखैश्च वन्दितं ध्यायेत्सदा कामदुघं प्रसन्नम् ॥ कर्ता प्राङ्मुख उपविश्य देशकालौ संकीर्त्य– 'अमुककामः पार्थिवपूजां करिष्ये' इति सङ्कल्प्य ॐ हराय नमः— इति मृदाहरणम् । ॐमहेश्वराय नमः–इति संघट्टनम्। ॐशूलपाणये नमः—प्रतिष्ठापनम् । ॐ पिनाकिने नमः—आवाहनम् । ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवरा-

भीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ इति ध्यात्वा ॐशिवाय नमः--इति मन्त्रेण पाद्यार्घ्याचमनीयानि समर्पयेत् । ततः--ॐपशुपतये नमः--इति स्नानम् । ॐ शिवाय नमः--इति वस्त्रयज्ञोपवीतगन्धालङ्कारपुष्पधूपदीपनैवेद्यफलताम्बूलानि दत्त्वा ॐक्षितिमूर्तये नमः १ ॐ भवाय जलमूर्तये नमः २ ॐ रुद्रायाग्निमूर्तये नमः ३ ॐ उग्राय वायुमूर्तये नमः ४ ॐ भीमायाकाश मूर्तयेनमः ५ ॐ पशुपतये नमः६ ॐ यजमानमूर्तये नमः ७ ॐ महादेवाय सोममूर्तये नमः ८ ॐ ईशानाय ईशमूर्तये नमः ९ इति पूर्वादिक्रमेणाक्षतादिना मूर्तीनां पूजनं कार्यम् । ततः-- ॐ महादेवाय नमः--इति क्षमापनम् ।

शिवनारदसंवादे-पितॄणां मुक्तये लिङ्गं पूज्यं रजतसम्भवम् । हैमजं सत्यलोकस्य प्राप्तये पूजयेत्पुमान् ॥ पूजयेत्ताम्रजं लिङ्गं पुष्टिकामो हि मानवः ।



मत्स्यसूक्ते—ताम्रलिङ्गं कलौ नार्चेद् रैत्यस्य सीसकस्य च । रक्तचन्दनलिङ्गं च शंखकांस्यायसं तथा ॥ तुष्टिकामस्तु सततं लिङ्गं पित्तलसम्भवम् । कीर्तिकामोयजेन्नित्यं लिङ्गं कांस्यसमुद्भवम् ॥ शत्रुमारणकामस्तु लिङ्गं लोहमयं सदा । सदा सीसमयं लिङ्गमायुष्कामोऽर्च्चयेन्नरः॥ विशेषाच्छैलजं भुक्त्यै मुक्तये चानुसङ्गतः । पार्थिवं भुक्तये शस्तं मुक्तये चानुसङ्गतः ॥ एवं वै दारुजं ज्ञेयं चिन्हलिङ्गं तथा पुनः । स्थिरालक्ष्मीप्रदं ज्ञेयं हैमं राज्यप्रदं च सत् । पुत्रवृद्धिकरं ताम्रं रङ्गमायुः प्रवर्धनम् ॥

लक्षणसमुच्चये—स्थिरालक्ष्मीप्रदं हैमं राजतं चैव राज्यहम् । प्रजावृद्धिकरं राङ्गं ताम्रमायुप्रवर्द्धनम् ॥ विद्वेषकारकं कांस्यं रीतिजं शत्रुनाशनम् ।रोगघ्नं सैसकं लिङ्गमायसं शत्रुनाशनम् ॥ अष्टलौहमयं लिङ्गं कुष्टरोगक्षयावहम् । त्रिलौहसंभवं लिङ्गं विज्ञानं प्रति सिद्धिदम् ॥ 

लिङ्गपुराणे—श्रीप्रदं रत्नजं लिङ्गं शिलाजं सर्वसिद्धिदम् ॥ धातुजं धनदं साक्षाद्दारुजं भोगसिद्धिदम् ॥

अन्यत्र—गन्धपुष्पमयं लिङ्गं तथान्नादिविनिर्मितम् ॥ कस्तूरी संभवं लिङ्गं धनाकाङ्क्षी प्रपूजयेत् ॥ लिङ्गं गोरोचनोत्थं च रूपकामस्तु पूजयेत् । कान्तिकामस्तु सततं लिङ्गं कुंकुमसंभवम् ॥ श्वेतागुरुसमुद्भूतं महाबुद्धिविवर्द्धनम् । धारणाशक्तिदं लिङ्गं कृष्णागुरुसमुद्भवम् ॥

पद्मपुराणे—पारदं च महाभूत्यै सौभाग्याय च मौक्तिकम् । चन्द्रकान्तं मृत्यु-जित्स्याद्धाटकं सर्वकामदम् ॥

मातृकाभेदतन्त्रे—पाषाणे शिवपूजायां द्विगुणं फलमीरितम् । स्वर्णलिङ्गे च पूजायां शत्रूणां नाशनं मतम् ॥ सर्वसिद्धीश्वरो राज्ये फलं तस्माच्चतुर्गुणम् । ताम्रे पुष्टिं विजानीयात्कांस्ये च धनसञ्चयम् ॥ पारदं परमेशानि ब्रह्मविष्णुशिवात्मकम् । योय-जेत्पारदं लिङ्गं स एव शम्भुमुख्यदः ॥ स एव धन्यो देवेशि स ज्ञानी स तु तत्त्ववित् । १०१



स ब्रह्मवेत्ता स धनी स राजा भुवि पूजितः ॥ अणिमादिविभूतीनामीश्वरः साधकोत्तमः ॥

गङ्गायां च लक्षगुणं लाक्षायां रोगवान्भवेत् । स्फाटिकं सर्वसिद्धिः स्यात्तथा मारकते प्रिये ॥ लौहलिङ्गे रिपोर्नाशं कामदं भस्मलिङ्गके ॥ वालुकायां काम्यसिद्धिर्गोमये रिपुहिंसनम् ॥ शिवस्य पूजनाद्देवो चतुर्वर्गाधिपो भवेत् । अष्टैश्वर्ययुतो मर्त्यः शंभुनाथस्य पूजनात् ॥ स्वयं नारायणः प्रोक्तो यदि शम्भुं प्रपूजयेत् । स्वर्गे मर्त्ये च पाताले ये देवाः संस्थिताः सदा ॥ तेषां पूजा भवेद्देवि शंभुनाथस्य पूजनात् ।

महानिर्माणतन्त्रे—अथ प्रदोषसमये गौरीशंकर जनात्। भास्कराघ्यं प्रदानाच्च दम्पत्योःशोधनं भवेत् ॥ यावच्चन्द्रश्च सूर्यश्च यावत्पृथ्वी च सागराः। तावदत्र महादेव स्थिरो भव नमोऽस्तु ते ॥ मन्त्रेणानेन सुदृढं कारयित्वा सदा शिवम् ॥ गृहेऽस्मिन् करुणासिन्धो स्थापितोऽसि मया प्रभो । प्रसीद भगवन् शंभो सर्वकारणकारण ॥ यावत्ससागरा पृथ्वी यावत् शशिदिवाकरौ । तावदस्मिन् गृहे तिष्ठ नमस्ते परमेश्वर ॥ विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् । सम्पूर्णमस्तु तत्सर्वं त्वत्प्रसादादुमापते॥ यावच्चन्द्रस्य सूर्यश्च यावत्पृथ्वी च सागराः । तन्मे कीर्तिरतुला लोके तिष्ठतु सर्वदा । १०२



स्थावरं शिवलिङ्गं तु न कदापि विचालयेत् । एकाङ्गपञ्चनावाद्ये द्विगुणं देवमर्चयेत्

द्विनद्वये तद् द्विगुणं तद्वैगुण्यं दिनत्रये ।। ततः षण्मासपर्यन्तं यदि पूजा न संभवेत् । तदाष्टकलशैर्देव स्नापयित्वायजेत्सुधीः ।। षण्मासात्परतो देवं प्राक्संस्कारविधानतः । पुनः सुसंस्कृतं कृत्वा पूजयेत्साधकाग्रणी ।। खण्डितं स्फुटितं व्यंगं संस्पृष्टं कुष्ठरोगिणा पतितंदुष्टभूम्यादौ न देवं पूजयेद् बुधः । हीनांगं स्फुटितं भग्नं देवं तोये विसर्जयेत् । स्पर्शादिदोषदुष्टं तु संस्कृत्य पुनरर्चयेत् ।। महापीठेऽनादिलिङ्गे सर्वदोषविवर्जिते । सर्वदा पूजयेत्तत्र स्वं स्वभिष्टं सुखाप्तये

पूजायां विशेषः—मातृकाभेदतन्त्रे द्वादशपटले–पुष्पगन्धं जलं द्रव्यं लिङ्गोपरि योजयेत् । लिङ्गमध्ये महावह्निः सैव रुद्रः प्रकीर्तितः ।। रुद्रोपरि क्षिपेद् यत्तु तदेव भस्मतां गतः । कुशाग्रमानं यत्तोयं तत्तोयेन यजेद् यदि । सत्यं सत्यं हि गिरिजेतज्जलं सागरोपमम्।।पुष्पञ्च मेरुसदृशं लिङ्गोपरि नियोजनात् । लिङ्गस्य मस्तके देवि यदन्न प रतिष्ठति ।। तदन्नस्य च दानेन क्षितिदानफलं लभेत् । एकेन तण्डुलेनैव यदि लिङ्गं प्रपूजयेत् । ब्रह्माण्डपात्रसंपूर्णमन्नदानफलं लभेत् । एकया दूर्वया वापि योऽर्चयेच्छिव- 
लिङ्गकम् ।। सर्वदेवस्य शीर्षेव चार्घदानफलं लभेत् । सामान्यतोयमानीय यदि

स्नायात् महेश्वरम् ॥ सार्द्धत्रिकोटितीर्थस्य स्नानस्य फलभाग्भवेत् ।

यन्त्रमूर्तिद्वये विचारः—यदि मूर्त्ति प्रकुर्यात्तु तत्र यन्त्रं न कारयेत्। यदिकुर्यात्तु मोहेन यजेद्वारद्वयं प्रिये ॥ द्विगुणं पूजन तत्र द्विगुणं बलिदानकम् । द्विगुणं प्रजपेन्मन्त्रं द्विगुणं होमयेत्सुधीः ॥ अन्यथा विफला पूजा विफलं बलिदानकम् । सर्वं हि विफलं यस्मात्तस्माद् यन्त्रं न कारयेत् ।

## —ःअर्चनाद्यकरणे दोषः—

शिवरहस्ये—शिवलिंगमनभ्यर्च्य यो भुङ्क्ते मोहसङ्गतः । स याति नरकं घोरं यावदाचन्द्रतारकम् ॥ लिङ्गार्चनं विहीनस्य समस्ता निष्फलाक्रिया । ततः सर्वार्थसिध्यर्थं लिङ्गपूजा विधीयते ॥

ईशानसंहितायाम्—यस्य नास्ति गृहे नित्यं शिवलिङ्गार्चनं शिवे । तद् गृहं चण्डि चाण्डाल गृहमेव न संशयः ॥





रुद्राक्षधारणम्—स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने। प्रायश्चित्ते तथा श्राद्धे

दीक्षाकाले विशेषतः ॥ अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्मवैदिकम् । कुर्याद्विप्रस्तु यो मोहात्स च नाप्नोति तत्फलम् ॥



## —:लिङ्गादिविचारः—



सूतसंहितायाम्—समावृत्य तुलारुढं वृद्धिमेति न हीयते । बाणलिङ्गमिति ख्यातं शेषं नार्मदमुच्यते ॥ पञ्चवारं यस्यैव तुलासाम्यं न जायते । तदा बाणं समाख्यातं शेषं पाषाणसंभवम् ॥

शिवरहस्ये—शिवप्रदक्षिणां कुर्यात्स्वयमष्टोत्तरं शतम् । सहस्रमयुतं लक्षं कोटिमन्येन कारयेत् ॥ प्रदक्षिणात्रयं कुर्यात्तथा पञ्चादशाथवा । अष्टौ द्वादश वा कार्या ह्यधिका अपि शक्तितः । प्रातः शिवार्चने देवि दश कार्या प्रदक्षिणाः । मध्याह्ने द्वादशाथैका दश सायाह्नि सादरम् ॥

आवाहनविचारः—स्फाटिके रत्नजे वापि सौवर्णे राजतेऽपि वा । रसजे बाणलिङ्गे तु नात्रावाहनमिष्यते ॥ धारया स्नापयेल्लिङ्गं जपन्मन्त्रमुपांशुना । एकवारं त्रिवारं वा पञ्चसप्तनवापि वा ॥ एकादशमथावृत्त्या चमकैकादशान्वितम् । द्विकारयानमिदं ज्ञेयं 

साक्षान्मोक्षप्रदायकम् ॥ पञ्चाक्षरेण च यत् स्नानं पञ्चब्रह्मात्मकेन वा। प्रणवेन यतः प्रोक्तं श्रीरुद्रेणैव केवलम् ॥ ऋक्सामयजुराथर्वमन्त्रैश्च स्नापयेच्छिवम् ॥

मेरुतन्त्रे–आवर्तनाभिषेकं तु यः कुर्यात्प्रत्यहं नरः। तस्यैव दिनजं पा' दैवजं नाशमाप्नुयात्। रुद्रीभिरेकादशभिराद्यः रुद्रः प्रकीर्तितः। अनेन सिक्तं यैर्लिङ्गं तेन पश्यन्ति भास्करिम् ॥ एकादशभिरेतैस्तु महारुद्रः प्रकीर्तितः। धनप्रदोऽधनानां च महापातकनाशनः ॥ अनेन विहितो होमः सोमयागफलप्रदः। अनाधिकारी दीक्षायां तस्य पापक्षयङ्करः ॥ एकादश महारुद्रैरतिरुद्रः प्रकीर्तितः। अतिपापहरोऽयं स्याद् दृष्टन्या येन निष्कृतिः ॥ विश्वासघातनं स्वामिद्रोहोन्यायेन दण्डनम्। कृतघ्नहा च सामर्थ्ये शरणागतनाशनम् ॥ अतिपापानि पञ्चेति शप्ते देशे तपस्तथा। अकर्मणि कृते यत्तदतिरुद्रा विनाशयेत्।

धनलोभात्परार्थं यो माभिषिञ्चेति मूढधीः। स तु चाण्डालवत् ज्ञेयो निर्धनस्सप्त जन्मसु ॥



शक्तिसंगमतन्त्रे ... कुसुमाख्या

तु भैरव्यां परिकीर्तिता ॥ गुञ्जामाला तु मातङ्ग्यां धूम्रायां खरदन्तजा । हरिद्राख्या तु बगला मुख्या माला प्रकीर्तिता ॥ दन्तोत्था नरशङ्खोत्था नारिकेलमयी तथा । अनयोर्न हि भेदोऽस्ति शिवशक्त्योर्यथा प्रिये । मालिका कमलाक्षस्य महालक्ष्म्याः प्रकीर्तिताः । भुवनेश्याः स्फाटिका स्यात् सिद्धविद्याविधौ शिवे । गुञ्जाख्यमालिका शस्ता । स्वर्णमाला सर्वसिद्ध्यै रौप्यजा सकलेष्टदा । ताम्रमाला सर्वशान्त्यै खड्गजा पितृमोक्षदा ॥ गजदन्तमयी माला सिद्धिदा बिल्वजार्थदा । अर्कतूलमवा पूर्वा शत्रोरुच्चाटनकर्मणि ॥

श्वेतगुञ्जा सिद्धविद्याविधौ प्रोक्ता महेश्वरि । शंखमाला वैष्णवे तु रुद्राक्षः शक्तिमात्रक ॥ भद्राक्षः शरभे प्रोक्तो गणेशे गजदन्तजा । त्रिपुरायां पुत्रजीवो गोविन्दे तुलसी मता ॥ सर्वमन्त्रे च रुद्राक्षः शक्तिमन्त्रे तु वा नहि । रत्नस्वर्णरौप्यमयी तथा ताम्रमयी शिवे ॥ औदुम्बरी बीजमयी वटबीजमयी तथा । पूगफलमयी माला जातीफलमयी तथा ॥ मधुमत्याकर्षणार्थं वीरविद्याविधावपि । प्रवालः सूर्यमन्त्रे च मौक्तिकं शक्तिमन्त्रके ॥

पद्मपुराणे—कृष्णमन्त्रजपे माला वृन्दारण्यसमुद्भवा । हैमीमणिमयी माला प्रशस्ता कमलाजपे ॥ सरस्वत्या मन्त्रजपे रौप्या मुक्ता विनिर्मिता । प्रजापतिजपे माला पुत्रजीवसमुद्भवा । पुत्रकामनराणां च सदा पुत्रप्रदा तु सा । राममन्त्रजपे माला पद्म-बीजसमुद्भवा । धात्री फलमयी माला विष्णोः कामनया जपे । रुद्राक्षेन्द्राक्षभद्रा-क्षवृक्षबीजसमुद्भवा ॥ महेशानमन्त्रजपेऽस्वेता मालाः फलप्रदा । कुशाग्रन्थमयी शुद्धा गायत्री वैष्णवी जपे ॥ स्फाटिकी सर्वदेवानामथवा तरणे जपे । श्रीहरेरङ्गुलिमयी जपे माला द्विजन्मनाम् ॥

तन्त्रराजे—कालिका छिन्नमस्ता च त्रिपुरा वारणी तथा । एता सर्वा न दुष्यन्ति जपे रुद्राक्षमालया ॥

तत्रैव—रुद्राक्षैः शक्तिमन्त्रश्च मन्त्री यः प्रपूजयेत् । स दुर्गतिमवाप्नोति निष्फलस्तस्य तज्जपः ॥

रुद्राक्षैः सर्वकार्याणि पद्माक्षैः पुष्टिरुत्तमा । कान्तिः श्रीखण्डमणिभिर्मौक्तिकैर्मुक्ति-भाग्भवेत् ॥ प्रवालैर्वश्यसिद्धिः स्यात् गुञ्जया मोहनं भवेत् । भद्राक्षैर्भाग्यसम्पत्ती

१०८

रुद्राक्षै राज्यमुक्तिदम् ॥ धनधान्यं सुतावाप्तिर्भवेद्धि पुत्रजीवकैः। अरिष्टमाला विद्वेषे बदरी धारणे मता॥ मरीचैर्भीषणे माला पिचुमर्दैर्विनाशने। अकस्मादीक्षिता सिद्धिर्महाशङ्खाख्य मालया॥ दन्ताख्यमालया देवि सर्वसिद्धीश्वरो भवेत्। रचिता चास्थिमणिभिःसर्व-शत्रुविनाशिनी॥ खरदन्तैः शत्रुनाशो गजदन्तैर्गुरुर्भवेत्॥ स्वयम्भूकुसुमैर्देवि सर्वविद्येश्वरो भवेत्। चन्दनैः कीर्तिलक्ष्मीःस्यात्तेजःस्यात्कुशमालया॥ तुलस्या मोक्षमाप्नोति लोहैर्मा-रणमादिशेत्। ताम्रःशान्तिर्लोहरौप्यैः सर्वसौख्यं फलं भवेत्॥ सौवर्णे राजलक्ष्मीःस्यात् सर्वास्थिमालया रिपून्। औदुम्बरैर्भूतनाशः प्लक्षैर्दारिद्र्यनाशनम्॥ वटबीजैर्यक्षिणी स्यात्कपर्दिभिर्महोदयः। शिवशक्तिमयी माला रुद्राक्षस्फाटिकैर्युता॥ रुद्राक्षस्वर्णसंयुक्ता माला हरिहरात्मिका। रुद्राक्षराप्यसंयुक्ता माला विधिशिवात्मिका। शक्तिश्रीमन्त्रजप्येषु रुद्राक्षैर्न दिवा जपेत्। कुण्डलीमालिका देवि भैरव्यां परिकीर्तिता।

कौलावलीनिर्णये—इन्द्राक्षैश्च महासिद्धिं तनुते मालिका सदा। गुञ्जायाःसर्वसिद्धिः स्याद् बिल्वकाष्ठेन सिद्धिदा॥ रक्तेन चन्दनस्यापि बालामालां प्रकल्पयेत्। दन्तेन कालि-कायास्तु गजदन्तेन मेरुणा॥ उग्रताराजपे शस्ता महाशङ्खस्य मालिका।

शक्तिसंगमतन्त्रे— अन्नस्य देवता लक्ष्मी वैष्णवे तु प्रजापतिः । सुवर्णं वह्निदैवत्यं रजतं चन्द्रदैवतम् ॥ हीरकं वारुणं ज्ञेयं रसानां पृथिवी स्मृता । जलस्य वरुणो देवो वीर्याणां वारुणेश्वरी। कृशरस्य रमा देवो परमान्नस्य कालिका। घृतदीपे महाविष्णु-स्तिलदीपे वनस्पतिः ॥ गन्धर्वश्च तथा धूपे घृतं सूर्याग्निदैवतम्। मधु वै वारुणं ज्ञेयं दधिक्षीरं महेश्वरः ॥ वानस्पत्यं महापुष्पं वैष्णवो गन्ध ईरितः। मालायां च दुर्गा सर्व देवीमयं च वा ॥ प्रतिमां पूजयेत् ज्ञात्वा नान्यथा सिद्धिराधकृत् ।



❀ इति ❀

—०—०—

# -:हमारे यहाँ की प्रकाशित पुस्तकें:-

१११

निर्णय सिन्धु भाषा टीका सम्पूर्ण ८०)

श्रीमद्भागवत भाषा टीका बारहों स्कन्ध सम्पूर्ण साँची ६०)

[ टीकाकार-पं० दौलतराम गौड ]

श्रीमद्देवीभागवत भाषा टीका बारहोस्कन्ध ८०)

ताजिक नीलकण्ठी भाषा टीका १२)

ग्रहशान्ति प्रयोग भाषा टीका १६)

दुर्गापाठ-मूल मोटा अक्षर सजिल्द ६)

दुर्गापाठ प्रयोग विधि सहित नया भाषा टीका श्लोक ६)

वैशाख माहात्म्य भाषा टीका ३)

वाल्मीकीय रामायण सुन्दर काण्ड गुटका मूल ४)

विवाहपद्धति भाषा टीका २)

दुर्गापाठ ६४ पेजी सजिल्द १)२५

महाभारत भाषा-टीका सबलसिंह चौहान कृत अठारहों पर्व ग्लेज ५०)

मनुस्मृति भाषा टीका १२)

भृगुसंहिता फलित सर्वाङ्ग दर्शन भाषा २०) १११

सामुद्रिक [illegible] २)

मुद्रक—बाम्बे मुद्रण, वाराणसी।